॥ महागायत्रीलीलास्तुती ॥

ॐ

अथ महागायत्रीलीलास्तुतिः ।

सदा गवेषयन् जगत्रयेषु वेदमातरं
चिदात्मना कृतस्थितं समत्र चाद्य लब्धवान् ।
उदस्रु गददं महोदयात्प्रणौमि भक्तिनौकया
सुदुस्तरं द्रुतं तितीर्षुरापदर्णवम् ॥ १॥

सुहीनलोकपातिनी सतां कृपाऽतिशोभते
ह्यत्सुधांशुचक्षुषे क्षयाम्ब ! माद्यशं जनम् ।
नवापि हीयते तवेषदीशि ! पालनेननो
भवाद्यतः कुपुत्रता न भासते प्रसूहृदि ॥ २।

नमामि मुक्तविद्रुमप्रतप्तहाटकाऽसिता-
वदातवर्णसुन्दरैः षडर्धलोललोचनैः ।
सरोजषण्डबान्धवप्रतप्तपावकप्रभैः
किरीटरत्नरञ्जितैः सुधांशुखण्डमण्डितैः ॥ ३॥

मुखैर्दशार्धसंमितैर्विराजमानविग्रहां
सुरेशचापसप्रभां समस्तदेववन्दिताम् ।
वराभयाङ्कुशान्वितैः कपालशूल शंख-
चक्रसारसद्वयीगुणाङ्कितैः करैर्विराजिताम् ॥ ४॥

भवद्रुमस्य मूलतां गतां मुनीन्द्रवन्दिताम्
अखण्ड भावमण्डलप्रकाशकारिणीं शिवाम् ।
समस्तदेवतामयीं समस्त सिद्धिदयिनीम्
पूर्वरूप विग्रहां सरस्वतीं भवार्तिहाम् ॥ ५॥

शुचीन्दुसूर्यलोचनां शुचीन्दुसूर्य विग्रहाम्
शुचीन्दुसूर्यसङ्गमस्वभावशालिनीं शुभाम् ।
पदद्वयानुकम्पितस्वशक्तिचक्रसेवितां
परेशशक्तिमुत्तमां भजे त्रिलोकसुन्दरीम् ॥ ६॥

महामहेश्वरी जगद्विसर्गसुस्थितिक्षय-
स्वतंत्रता शरीरिणी बभूव या महेशितुः ।
द्विपत्रितादिभेदतो लतायमानविग्रहा
त्रयीश्वरी सदा तु सा जगञ्जयाय जायताम् ॥ ७॥

नमामि तन्मुखारविन्दपञ्चकं मलापहं
गलैकनालकं सदाविकासि भक्तिसम्भवम् ।
स्वभक्तहंससेवितं शुचीन्दुपद्मबन्धवः
प्रतीकभूतविग्रहा गता हि यत्र पञ्चताम् ॥ ८॥

भवार्णवेऽतिदुःसहस्मराधिदिग्धमानसं
षडूर्मिनित्यपीडितं जनं दिधीर्षुमानसा ।
श्रुतिध्वनिस्फुरन्मुखारविन्दभूसुरैः सदा
त्रिसन्ध्यमीश्वरी नुताऽस्तु सा सुखप्रदा हि नः ॥ ९॥

त्रयीप्रसूः स्वदृष्टिपातधूतभक्तकल्मषा
समैर्जुनैर्नुता मुदा स्ववर्णधर्मभेदतः ।
निलिम्पनिम्नगामिषेण पादधौतजं जलं
यदीयमागतं क्षितिं तनोतु नः शिवं तु सा ॥ १०॥

स्वदम्भवञ्चिताखिलं कुभोगसक्तमानसं
सदाऽशुचिं कुमार्गगं शठं च शङ्कसे यदि ।
कथं स्वपादचिन्तनोत्थवैभवं नहीश्वरि !
यतोङ्घ्रिचिन्तकं दयादृशेक्षसे न माद्यशम् ॥ ११॥

अनेकदोषदूषितेष्वनिर्विवेचना सती
स्वतंत्रशक्तिरीश्वरी भवाधनाशकारिणी ।
कृपामयीम् दृशं विधाय सा स्वभक्तिपात्रितं
स्वपत्कजे मधुव्रतं करोतु मामहर्निशम् ॥ १२॥

त्रिसन्ध्यमिष्टदैवतं सुकेशवास्यजं स्तवं
स्मरन् हृदीद्धभावनो विधाय वेदमातरम् ।
विधूय पापसंचयं वितीर्य कीर्तिमुत्तमाम्-
इह त्वमुत्र कैवलं पदं स यातिं निर्भयम् ॥ १३॥

इति श्रीमहागायत्रीलीलास्तुतिः ।